। पञ्जापदेशीयसुदर्शनेन निर्मिता ।

# संस्कृतभाषा

अर्थात्

## भारतवर्षस्यादिभाषा संस्कृतमेवास्तीति प्रतिपादनम् ।

# SANSKRIT BHASHA

BY

SUDARSHAN DAS PANJABI



BENARES:

THE CHANDRAPRABHA PRESS COMPANY LD.

1896.

पहिलीबार १०००

दाम ≶)



॥ श्रीहरिः ॥

# संस्कृतभाषा





ननु सर्वेषामेव देशानां प्राचीनभाषा निश्चितास्ति यथा-तुर्कदेशस्य तुर्की, फारसदेशस्य फारसी, अर्बदेशस्य अरबी, इङ्गलैंडदेशस्य अंग्रेजी, इत्यादि ।

न च विज्ञायते भारतवर्षस्य प्राचीनभाषा काऽऽसी-दिति । तन्निवेद्यते भारतस्य भाषा संस्कृतमेवासीत् । या च देवभाषेत्यप्युच्यते । यस्याश्च रचितं भगवता पाणिनिनाऽ-ष्टाध्यायीतिनामकं व्याकरणं सैव प्राचीनभारतभाषास्ति ।

आसीत् किमपि सौभाग्यं भारतस्य यत् सर्वत्र भारते श्रवणपुटेन संस्कृतभाषैव पीता जनैः, सैव रसनयोदाहृता, सैव पठिता, सैव लिखिता च ।

हा कष्टं भाग्यवशेन तस्य संस्कृतस्यैषा दुर्गतिर्जाता यत् प्राप्तोऽवसरोऽस्यापि प्रश्नस्य 'भारतस्य प्राचीनभाषा का-सीदिति' । न चाश्चर्यमघटितघटनापटुत्वादीश्वरस्य ।

उक्तं च-'इह खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः' ।

संस्कृतसंभाषणनाश्रवणोपरि लवणच्चोदोप्यसौनिपात्यते यदुच्यते जनैः संस्कृतं भारतस्य प्राचीनभाषा नास्ति। किं विशेषवाष्पपातनेन निश्वासप्रकटीकरणेन च यतो युक्तिप्रमाणाभ्यां निश्चितमेवास्ति संस्कृतमेव प्राचीनभाषा भारतस्येति ।

सन्ति चात्र विप्रतिपत्तयो यथा - संस्कृतमितिनाम्ना संस्कृतं संस्कारं प्राप्तं निर्मितमित्यर्थ अतः कैश्चिद् बुधजनैः स्वयं संभाषणार्थं निर्मितं ननु सकलभारतवासिनामासी त्साधारण्येन संस्कृतं भाषेति कैश्चिदुच्यते ।

अत्रोच्यते – किमीश्वरेण विनाऽन्योपि कोपि पदार्थोऽनिर्मितो ऽस्ति ? नास्त्येव, सकलप्रपञ्चस्यैव निर्मितत्वात् ।

तत्र भारतस्यैव निर्मितत्वसिद्धेः का हानिस्तदन्तर्गतभाषायाः संस्कृतरूपाया निर्मितत्वप्राप्तेः ।

ननु संस्कृतमिति संस्कारं प्राप्तमित्यर्थलाभेनाऽनुमीयते संस्कारकरणात्पूर्वं प्राथमिकं किमप्यन्यदेवरूपमासीन्नत्वेतत् संस्कारादेवास्य प्राप्तेरिति चेन्न ।

यदि प्राथमिकमन्यदेवासीद्रूपं तर्हि दर्श्यतां तस्योदाहरणं यत्कीदृशमासीत् । उदाहरणदर्शनाभावेन ज्ञायत एकरूप्यम् ।

किं च भवदभिलषितं रूपं वेदेभ्योपि प्राचीनमासीदिति परिभाषणमेवानुचितं, यतो 'अंग्रेज' कुलेनाप्युच्यते भारते वेदानां समयः प्राचीनतरोस्तीति ।

यदि च वेदेभ्यः पश्चादासीत्तदा सर्वप्राचीना वेदास्तूपलभ्यन्ते, तदनंतरजातस्य संस्कृतपूर्वरूपस्यैकमप्युदाहरणं

नोपलभ्यत इति तु न्यायविरुद्धम् तव रसनायोग्यम् । वेदास्तु प्राचीनतराः सन्ति संस्कृतं प्राचीनं नास्तीति कथनमपि तथा।

अपि च वेदाः किमर्थं प्रकटीकृताः परमेश्वरेणान्येन वेति प्रश्न एतदेवोक्तं भविष्यति प्रजार्थमिति । यदि च प्रजायां संस्कृतसंभाषणप्रचार एव नासीत्तदा वेदानां प्रजार्थत्वं केन हेतुना सेत्स्यति ।

यदि तात्कालिकविद्वज्जनार्थमित्युच्यते तदा त्वीश्वरे वैषम्यदोषः प्राप्नोति न च वैषम्यमस्ति तस्मिन् । यतो वैषम्यं वासनया भवति वासनैव तस्मिन्नास्ति तथा चोक्तं भगवता पतञ्जलिना 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति । तथोक्तं साक्षादपि गीतायां - 'समोऽहं सर्वभूतेषु न मे द्वेष्योस्ति न प्रियः' इति । नन्वत्रैव 'न प्रियः' इत्युक्तं प्रियत्वाभावे कथमाऽऽयासितमीश्वरेणेतिचेत् । 'न प्रियः' इत्यस्य प्रियत्वाभावे नास्ति तात्पर्य्यं किं तु प्रीत्यां न्यूनाधिक्याऽभावं द्योतयन्नीश्वरस्य समदृष्टितां व्यञ्जयति। न चेश्वरस्यदृष्टिरेव नास्तीति शङ्क्यम् । 'तदैक्षतबहुस्यांप्रजायेय' इत्यादिश्रुत्या सिद्धत्वात् ।

नन्वीश्वर एव नास्तीति चेदुच्यते - मा भवत्वीश्वरः। तथापि वेदस्योपलभ्यमानत्वात्तस्य कर्त्ता त्वयाप्यवश्यं स्वीकर्तव्य एव । ततो महत्त्वऽपि समदृष्टितैव युक्तोक्तं च 'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि-शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' १ यदि चेद् घृणास्त्यऽनास्तिकग्रन्थवाक्यत्वात्तर्हि राजनीतिवाक्यं गृहाण 'अयं निजः परो वेति विभागः क्षुद्रचेतसां - उदारहृदयानां तु वसुधैव कुटुम्बकम्' इति । तस्मात्सिद्धं वेदानां प्रजार्थत्वम् । तत्तु सकलप्रजायां संस्कृत-

प्रचारस्वीकारेणैव सेत्स्यति। ननु त्वयैवोक्तं पूर्वं 'भारतस्यैव निर्मितत्वसिद्धेः का हानिस्तदन्तर्गतभाषायाः संस्कृतरूपाया निर्मितत्वप्राप्तेः' इत्यनेन तवैव जिह्वया कल्पितत्वं प्राप्तं ते परमप्रियस्य संस्कृतस्य' इतिचेदायुष्मता स्थूलमीच्यते यतोस्य नास्त्यभिप्रायः कैश्चित् पण्डितैः स्वसंभाषणार्थं कल्पितं संस्कृतमिति। किं तु येन भारतं कल्पितं तेनैवातोपि सिद्धमाऽऽदि भाषात्वं संस्कृतस्य।

ननु यदि सकलप्रजायां प्रचार आसीत् संस्कृतस्य मातृभाषात्वात्तदा स्वयमेव वेदार्थज्ञता प्राप्ता मानवानां, पुनर्वेदाध्ययनं किमर्थं कृतमाचार्यमुखाज्जनैरिति चेन्निवेदयामि श्रूयताम्- इङ्गलैंडदेशस्य अंगरेजी तु मातृभाषैव तदा ह्यणैरपि किमर्थं पठ्यते पाठशालायां अंगरेजी। अन्यदेशीयजनैरपि स्वदेशभाषा किमधीयते। भारतवासिभिरपि 'विहारीसतसई' 'तुलसीरामायण' इत्यादि ग्रन्थाः किमर्थं पठ्यन्ते गुरुमुखात्। असौ महात्मा तुलसीरामायणं सम्यग् जानातीति च कथमुच्यते। यथैतत्सर्वं युक्तं मन्यते तथा संस्कृतस्य मातृभाषात्वेपि युक्तं वेदानां गुरुमुखादध्ययनमिति बहुलमेतदेव। किं च यत् श्रीमतामाग्रहोस्ति संस्कृतमिति पदेन संस्कारकर्मत्वमेवावगम्यतेऽस्य संस्कृतस्य। तन्नोच्यताम्। किं मम पित्रा पितृव्येन पितामहेन गुरुणा महागुरुणा वा संस्कारः कृतः। अथवा तव तैः कृतः। अथवा अन्यस्यैव कस्यापि तैः सः कृतः। केन किंनाम्ना कदा कस्यां सभायां कृतोस्तीति सकलं निवेद्यताम्।

यदि केनापि न कृतः न चास्ति प्रमाणं तत्र तथापि मे

वचनात् संस्कारकर्मता स्वीकर्तव्येत्युच्यते । तदा मयाप्युच्यते तवोत्तमाङ्गे शृङ्गमस्तीति तत्त्वयापि स्वीकर्तव्यम् ।

ननु भवतु मे शिरसि शृङ्गं स्वीकृतं च मया, अधुना तु संस्कृतस्य संस्कारकर्मत्वं स्वीकुरु । अत्रोच्यते शृङ्गवत्त्वात्त्वयि पशुत्वं प्राप्तं पशूनां मूर्खानां वचनं नाऽवधेयं भवतीति तव महता प्रयत्नेनापि न सिद्धं संस्कृतस्य संस्कारकर्मत्वम् ।

अथ यदि संस्कारकर्मत्वमेव नास्ति संस्कृतस्य तर्हि संस्कृतमिति किमर्थं कृतं नाम, यतो व्युत्पत्तिपक्षस्वीकारेणाऽसंस्कृतस्य संस्कृतमितिनाम नोचितम् । अथ च संस्कृते रमत इति रामः, विवेष्टीति विष्णुरित्यादौ सर्वत्र यथा व्युत्पत्तिपक्षोऽस्ति तथा संस्कृतपदेऽपि । इत्युक्तं भवता पण्डितवरेण, श्रूयतां प्रश्नोत्तरम् । यथा - शास्त्रे व्युत्पत्तिपक्षपरिग्रहोऽस्ति तथाऽव्युत्पत्तिपक्षपरिग्रहोप्यस्त्यऽन्यथार्थवत्सूत्रस्य वैयर्थ्यापत्तिः । कृत्तद्धितसूत्रेणैव व्युत्पन्नानां प्रातिपदिकत्वसिद्धेः । अथ यथा संस्कृतपदे व्युत्पत्तिपक्षस्वीकारेण संस्कारकर्मता मन्यते त्वया, तथाऽचलेति पदेऽपि न चलतीत्यऽचलेति कथं न स्वीक्रियते तत्र तु व्युत्पत्तिपक्षमनालोच्यैव पृथिवी स्थिराऽस्ति रविरेव तदुपरि भ्रमतीत्यादिविकल्प्यते तेऽहो वैषम्यम् । अथान्यदपि नाम यद्यऽस्तु तत्रापि त्वया व्युत्पत्तिपक्षेण कुजालकल्पना किं कर्तुं न शक्यते यस्मान्निपुणोसि तत्र ।

किं च संस्कारेणापि किं व्यक्तिभेदो भवति, न भवत्येव । यदि भवति तर्हि ददाम्येकमेकामजां तां भवन्तः संस्कारद्वारा गोरूपेण परिणमन्ताम् । अयि महाशयशिरोमणे संस्कारेणाप्येष एव भेदो भवति यः किल शयनोत्थितस्य स्नाने

संपादिते, संपन्नस्नानस्याऽशने इति लच्यते। न तु शयनोत्थितो देवदत्तः स्नानेन यज्ञदत्तो भवति, स्नानेन यज्ञदत्तरूपतां प्राप्तो भोजनेन विष्णुदत्तो भवति। यदि यज्ञदत्तः शयनस्नानाशनादौ, संस्कारविशेषे चूडाकर्मोपनयन परिणयनादौ च जनेः आमरणमेक एव तिष्ठति तर्हि संस्कृते संस्कारेण भेदो जात इति कथमुच्यते।

यदि च कालिकभेदेन तदुच्यते, कालिकभेदस्तु सर्वत्रैव निबद्ध एव। यथा - पूर्वकाले भीमसेनादयोऽतिबलवन्तो मानवा आसन्। इदानींतनास्तु न्यूनबलाः सन्ति तत्र केषु मानव प्रयोगो भवतु। नागरीभाषायामपि विहरीकृतानां श्रीसूरदासकृतानामानंदघनकृतानां नागरीदासकृतानां चेत्यादीनां सर्वेषामेव ग्रन्थानां भाषाया भेदोऽस्त्येव। तत्र कस्य ग्रन्थस्य भाषा नागरी, कस्याऽनागरीति नास्ति भेदः सर्वेषां नागर्येव। तथा संस्कृतेपि कालभेदो भेदाय न शक्तः।

ननु भवतु न वा भवतु संस्कारकर्मत्वं। किं तु संभाषणप्रचारस्तु नैवासीदित्यपि न सम्यक्। यतो विद्वद्भिः पाणिनिप्रभृतिभिः यन्निरमायि व्याकरणमस्य संस्कृतस्य तत् किं ते विक्षिप्ता आसन्नथवाऽऽधुनिका मथुरावासिनश्चौबेब्राह्मणा भङ्गापानोन्मत्ताः। यत्तैरप्रचलिताया व्याकरणं कृतम्। निर्मिता च मनोभिलाषिता भाषा निष्फला। यतो भाषायाः साफल्यं संभाषणेनैव भवति भारतं विनान्यत्र प्रचार आसीदित्यस्य तु कथैव का।

यदि चाभिप्रायोस्ति ते नष्टा भ्रष्टा कापि पूर्वं भाषासीत्। तस्या अपि कोपि भागो गृहीत्वा संस्कृत्य च स्वयमपि

निर्माय चेत्यादिप्रकारेण मिश्रणं कृत्वा प्रचारं प्रापिता पाणिनिप्रभृतिभिः । तस्मात् प्राप्तमनेन शासनेन तैः प्रचारं प्रापितैषा भाषा । अयि कृपानिधेऽहं सहस्रधाञ्जलिं कृत्वा प्रार्थयामि संप्रत्यप्येकवारं प्रापय प्रचारं संस्कृतम् ।

यदि चेदुच्यते नाहं चक्रवर्त्ती येन शासयामि । तर्हि पाणिनिप्रभृतयः किं चक्रवर्तिन आसन् ।

अयि चतुरचूड़ामणे यदि शासनेनापि कापि प्रचारं प्राप्नुयाद् भाषा तर्हि भारतवासिनां स्तनंधयैरपि नागरी-भाषणं दोषवद् भवेत् । ननु संस्कृतं देवभाषेत्युच्यते त्वं वदसि भारतभाषेतिचेत् । तदपि निवेदयामि गुरो । सम्यगुक्तं देवभाषेति । अनेन तु संस्कृतस्य स्वर्गेपि प्राप्तं राज्यम् । तदपि गुणाय न तु दोषाय ।

इन्द्रस्य नेत्रसहस्रमस्ति, अन्यासां देवतानामपि नेत्र-युगलमस्ति । रसना नासिका मुखमित्यादयोप्यमराणां सन्ति ते किं मानवेषु नोपलभ्यन्ते । स्वर्गे सुखमस्ति तत् किं मात्रया मह्यां नास्ति । यदि च व्यक्तिभेदेन देशभेदेन भिन्न-त्वात्तेषां नदोषः । तर्हि संस्कृते किं व्यक्तिदेशभेदो नास्ति, भारतस्वर्गयोः मानवामरयोर्भिन्नत्वात् ।

ननु वस्तु द्विविधं भवति किंचित्साधारणं किंचिदऽसा-धारणम् । नेत्रादीनां साधारणत्वान्नरेषूपलब्धावऽदोषः । संस्कृतं त्वऽसाधारणं वृन्दारकाणाम् । इति चेत् । किमैन्द्रप-दादप्यऽसाधारणं संस्कृतं तदेव लब्धं नहुषेण । पारिजातो-प्यानीतो भगवता कृष्णेन । सुराङ्गना अप्यानीता रावणेन ।

न चास्तिकपच्चोस्त्ययं । तर्हि संस्कृतं देवभाषेत्यपि स

एव । ननु मे पक्षस्य त्वया रक्षणं कर्तव्यमेवास्ति चेत्तह्येवं वद वर। यद्येष एवाग्रहोस्ति तदा मद्दर्शितया सरण्याऽवतरन्तु भवन्तः । यथा - पूर्वं यासीद्भाषा सा वेदभाषा देवभाषेति नामद्वयेनोक्ता नरैर्भाषिता च। तदनन्तरं स्त्रीशूद्रादीनां पठनपरिपाट्यामल्पतां गतायां तेषां संभाषणे प्राप्तं भेदेन । अन्योपि न प्राप्नुयाद्भेद इति समालोच्य प्रेक्षावद्भिर्लोकभाषां वेदभाषां च संमिश्र्य निरमायि व्याकरणम् । सा मिश्रिता प्राप्तमर्यादा भाषा संस्कृतभाषेतिसंकेतितम् । इति संभाव्यते। तथापि यत्संस्कृतमित्युच्यते तस्यैव सिद्धं संभाषणं पुरा ।

ननु पूर्वं वेदभाषैव प्रभाषिता नरैरिति तवैव निवेदनेन प्राप्तं नाम संस्कृतभिन्नैव कापि भाषासीत् । इति चेच्छृणु । वृद्धादाबालकं पण्डितादापामरं सकले जगति प्रतिजनं पृच्छ 'वेदस्य भाषा कतमे'त्यनुयोगेनैव निवेदयिष्यन्ति संस्कृत-मिति । ततोपि मम सिद्धिः ।

अथ च यद्यन्यदीयकरावलम्बनेनैव गम्यते तदा तूष्णी मास्ताम् । यदि स्वयमप्यस्ति गमनशक्तिस्तर्हि त्यक्ताग्रहं समालोच्यतां, लौकिकाद् वैदिकस्य कियद्भेदोस्ति संस्कृतस्य । अयि मनीषिचूडामणे समुक्तसंस्कृतयोरल्पतरोस्ति भेदः । यथा वेदे अस्म इति प्रयुज्यते लोके पुनरस्मभ्यमिति । स चापि प्रतिशब्दं नास्ति किं तु कुत्रचिदेव । तदपि नियमि-तोस्ति वेदेऽस्म इति । लोकेऽस्मभ्यमिति । प्रकृतिस्तूभयात्रा-प्यऽस्मदेव ।

यद्यनेनैव भेदेन भेद इत्युच्यते तर्हि गद्‌वदादि प्रयोगैः विष्णुनारायणशिवशङ्करादिप्रयोगैरपि भेदं वद ।

यथैकच विष्णुशब्दोस्त्यन्यच नारायणशब्दोस्ति पर्यायवाचित्वात् किमर्थं शब्दभेदेन कृतः प्रयोग इत्यादि विचारणया। अथैवं भेदस्वीकारे महदाकुलीभविष्यति विस्तरभयात्तन्न निवेद्यते।

अपि च वेदानामपि भाषा संस्कृतमित्येवोच्यते। वेदानां समयः प्राचीनतरोस्तीत्यपि च। एवं वेदेभ्यः पूर्वं कोपि नासीत्तदा केन कृतः संस्कारो यदि च वेदेभ्यः पूर्वं कापि भाषा नासीत्तदा कस्याः कृतः। इति कर्तृकर्मता निवेद्यताम्।

ननु वेदेभ्योपि पूर्वमासन्मानवा आसीच्च कापि भाषेति, निवेदयामि तदा वेदानां वर्त्तमानभाषामनाहृत्य नूतनभाषायां निर्वर्तनेन न सेत्स्यति प्रजार्थत्वम्। तच्चावश्यकमतः स्वीकुरु वेदभाषावद् व्यावहारिकसंस्कृतेपि रूढं संस्कृतपदम्। संप्रत्यपि समागतं मनसि किंचिन्नवा। न चेदन्यदपि वक्ष्यते। श्रूयतामयि श्रवणं दत्त्वा यथा - संदेहोत्पत्तिरेव कथंकारं भवति यदि कोपि संभवो भवति तदैवेति वक्तव्यम् तदा तु संभवत्येव यदि संस्कृतस्य प्राचीनभारतभाषात्वं तदैवेयं क्रियते कुजालकल्पना त्वया। अन्यथा अर्वी भारतभाषा आसीन्न वा, अथ अङ्गरेजी भारतभाषा असीन्न वा, किमित्यादिर्न क्रियते संशयः।

यदि च संभवति भारतभाषात्वं संस्कृतस्य, उदाहरणान्यपि प्राप्नुवन्त्येव, अन्यस्यां भाषायां प्राचीनभारतीयत्वसाधने युक्तिरपि नास्ति, न चोपलभ्यन्त उदाहरणानीति संस्कृतं किं तेऽनादिरिपोः पुत्रोस्ति येन समूलघातं हन्यते।

ननु नष्टाया भाषायाः कथमुपलभ्यन्तामुदाहरणानि

तत्र यदासि किं भवादृशैर्न नाशितं संस्कृतं, नष्टस्यापि तस्य पुस्तकान्युदाहरणानि समीक्ष्यन्ते । संभाषणप्रचारनाशेनैव नाश उच्यते भाषायाः ॥

ऋते चाथ भाषां शकुनिनिकरोपि शक्नोति ख्यातुमि-त्यपि न शक्यते वक्तुम् । का कथा पुनर्मानवसमूहस्य, भवत्येव च भाषा प्रतिदेशमेवं भारतस्यापि निर्दिश्यैव भाषा, एवं यदि संस्कृतभिन्ना भाषासीत्, तस्याः किं नाम, किमुदाहरणम् । इत्यत्र उदाहरणं किं नामापि न प्राप्स्यते ॥

संस्कृतस्य तु वेदभारतरामायणादिपुस्तकमुदाहरणं ।

अपि चावासनिर्माणसमये कुड्याद्युपरि यत्संवत्सरचन्द्र-नामादि लिख्यते तत्प्रचलितभाषायामेव, यदीयं युक्तिर्मे सम्यगस्ति तदा काव्यमालान्तर्गता प्राचीनलेखमाला नि-रीक्षणीयास्ति । एवं स्वयमेव स्फुटी भविष्यति नाम कासीद् भारतभाषेति ॥

अन्यच्च क्ष्मामण्डले सर्वासां भाषाणांमध्ये संस्कृतमेव प्राचीनतरमिति साधितं हूणजनैः । उच्यतां कुत्र प्रचार-आसीद् संभाषणस्य । ऋते भारतं तपस्विनः संस्कृतस्यान्यत्र नाशप्रमाणाभावात् । भारते प्रमाणाश्च सिद्धं नः समी-क्षितम् ॥

अपि च श्रूयतां सज्जनशिखामणे यो देशो येषां जनानां भवति तेषां प्राथमिकेष्टग्रन्थास्तस्यैव देशस्य भाषायां संपा-द्यन्ते यथा-म्लेच्छानां अर्वनामको देश अर्वीभाषायामेव तेषां कुराननामको ग्रन्थोस्ति । एवं हूणानामपि वायबिल ईसामसीप्रभृति हूणभाषायामेव ।

सिद्धमेवास्ति च भारतं हिंदूजनानां देशः । तेऽत्रैव निवसन्तीति, आस्तिकाः सन्ति ते इत्यपि च, तेषामिष्ट-ग्रन्था वेदपुराणादय इदमपि । ग्रन्थाश्च ते संस्कृतनिर्मिता इति सिद्धिः संस्कृतमेव भारतभाषेति ॥

यतो ये निर्मीयन्ते च ग्रन्थास्ते केवलं प्रजोपकारतया यथा - सकलसाधारणप्रजाया उपकारो भवेदनेन संदर्भेणेति। अन्यथा संप्रति कथं नागरी भाषायां यतन्ते भवन्तः । तदे-तदर्थमेव नामेदानीं भारतभाषा नागर्येव तस्यां संदर्भनि-र्माणेन निखिललोकोपकारो भविष्यति ।

इयं च सर्वोपकारिणी मतिरधुनैव राजकुलं दृष्ट्वा भारतेपि नाग्यत इति न वक्तव्यम् । किंतु पूर्वं तावदस्या एव मतेर्भारते राज्यमासीदन्यथा कथं महदुन्नतिभूमिं गतं भारतम् । एवं पूर्वमपि सर्वोपकारधिया संदर्भाः संस्कृत एव कृता जनैरिति ज्ञायते भारतभाषा संस्कृतमेवेति ॥

अथ च नागरी भाषापि सैव प्रशस्यते या संस्कृतमयी भवति । यदि च भारतस्य पूर्वा भाषा संस्कृतं न स्यात्तदा संस्कृतमयीनागरीप्रशंसनं कथं संगच्छेत । यत आदि भाषा-संश्लेषतः प्रशस्यते । नन्वन्यभाषासंयोगत्वेन संस्कृतसौन्द-र्येण वा तत्संयोगः स्तूयत इतिचेत्तर्हि फारसीभाषा अंग्रेजी-भाषा वा किं नागरीतोऽन्या नास्ति किं वा ते भाषे सुन्दर्यौ नास्तः । यत्तयोः संयोगो न प्रशस्यते । यदि च सुन्दरत्वं नाभिमतं तयोर्भवता तदा स्वकार्यव्यापारे स्वदर्शच्या कथं संभाष्यते अंग्रेजी । नन्वस्माभिः अंग्रेजीभाषाया अपि संबन्धः प्रशस्यते तदा विहारीप्रभृतिभिः कथं न फारसी भाषामयी

कृता कविता। इदानींतनैरपि अंग्रेजीविद्यानिपुणैर्हरिचन्द्र-जगन्नाथप्रभृतिभिः कथं वा नोपादीयते स्वकवितायां अंग्रेजी भाषासंबन्धः। तेन प्रत्यक्षमिवानुमीयते भारतस्यादि भाषा संस्कृतमेव। आसीच्च कदापि पुरा भारते चक्रवर्तित्वं संस्कृत-स्येतिपुष्कलम्।

ननु युक्तिवादेनैवोच्यते त्वया न च दत्तं किमपि प्रमाण-मिति चेन्नीयन्तां प्रमाणान्यपि। तत्र तावत् यद् भगवता पाणिनिना 'अस्तेर्भूः २।४।५२' इति सूत्रमुक्तं तस्यार्थः 'अस धातोरार्धधातुकविषये भू इत्ययमादेशःस्यात्'। यदि संस्कृ-तस्य प्रचारो नासीत्तर्हि कृतमनेन सूत्रेण। किमर्थमार्धधातुक-विषये भ्वादेशविधानं कृतं किं भविष्यतीतिवत् "असिष्य-तीति" उच्चारयितुं न शक्यते। शक्यते च। पुनः एतत्सूत्रनि-र्माणेन मुधैव गौरवं कृतम्। तस्मादनुमीयतेऽनेन पूर्वमासी-देव संस्कृतसंभाषणप्रचारो यतोऽसधातोरार्धधातुकविषये भूधातुवत् प्रयोगप्राप्त्या मुनिनाऽऽर्धधातुकेऽसःस्थाने 'अस्तेर्भूः' इत्यनेन भू एवादिष्टः।

अथ च 'गोधाया ढ्रक् ४।१।१२९।' इत्यनेनापत्यार्थे गोधाशब्दात् ढ्रक्प्रत्ययमुपदिश्य पुनः 'आरगुदीचाम् ४।१।१३०।' इत्यनेनोदीचां मते गोधाशब्दादारक्प्रत्यय उद्दिश्यते। तदपि कथं। पूर्ववदेव वृथैव कस्माद् गौरवं कृतं। तेन ज्ञायत उदीचां मते गौधार इति। सामान्यतो गौधेर इति प्रयुक्त-मासीत्तथैव मुनिनापि सूत्रद्वयं कृतम्। गौधेय इत्यर्थं गोधा-शब्दस्य शुभ्रादिषु च न्यासः कृतः।

अपि च 'तस्यापत्यम् ४।१।९२।' इत्यनेन अण् विहितः पुनस्तस्मिन्नेवार्थे 'अत इञ् ४।१।९५।' इत्यनेन

इञ्विहितः तत् किमर्थमेकसूत्रेणैव निर्वाहे प्राप्ते द्वितीयं सूत्रं कृतं। लभ्यते तेन औपगव इत्याद्यर्थं प्रथमं, दाशरथि-रित्याद्यर्थं द्वितीयम्।

एवमन्यान्यपि बहूनि सूत्राणि संस्कृतप्रचारानुमापकानि सन्ति।

यन्निर्मीयते तत्राऽवश्यंभाविनी भवति लाघवापेक्षा गौरवं तु विवशं क्रियते। तस्माद् यदि संस्कृतस्य प्रचारो नासीन्निर्मितं चैतदस्ति तदैकार्थ एकमेव सूत्रं कथं न कृतं किमर्थमेकार्थ एव बहुसूत्रसंपादनेन गौरवायितम्। तेनानुमीयते संस्कृतप्रचारत्वम्। यत एकार्थ एव विविधाः प्रयोगा उपलब्धा यथा 'औपगवः' दाशरथिः, गौधेरः, गौधारः, वैनतेयः, कौलटिनेयः, चाटकैरः रैवतिकः, इत्यादयः तेषां सर्वेषां संग्रहार्थं बहुसूत्रबंधनेन विवशं गौरवं कृतम्॥

ननु कदाऽवातरद् भूतले भगवान् पाणिनिरित्यपेक्ष्यते चेद् गृहाण प्रमाणं शाब्दं तथाहि—

"पाणिनिः कोटिभिः शिष्यैर्लक्ष्यैः कात्यायनस्तथा
नृपस्य भ्रातरः सर्वे चान्ये भूपाः समाययुः" १।
इत्युक्तं ब्रह्मवैवर्तस्य श्रीकृष्णखण्डे १०४ अध्याये।

तत्र हि द्वारिकायां श्रीकृष्णचन्द्रसमीप आगतानां जनानां प्रस्ताव एतदुक्तम्। तस्माज् ज्ञायते योसौ किल कृष्णचन्द्रस्य युधिष्ठिरस्य च समयः स एव पाणिनेरपि। लब्धोऽनेनाऽऽयुधिष्ठिरं संस्कृतसंभाषणप्रचारः।

नन्वेतत् प्रमाणं पाणिनिसत्तागमकमस्ति न चाष्टाध्यायी निर्माणसमयस्येति चेन्मा भवतु किमनेन। युधिष्ठिर

समये संस्कृतप्रचारो न सेत्स्यतीति चेन्न च ममाग्रहोऽस्ति संभाषणसमयनियमने किं तु सर्वतः पूर्वं संस्कृतस्यैव संभाषणप्रचार आसीदिति । तत्त्वष्टाध्यायीलाभमात्रेण, एकार्थेऽनेकसूत्रविरचनेन पूर्वोक्तयुक्तिभिश्च सिद्धमेवं ।

अथान्यदपि नीयतां भाष्यप्रमाणम् । तथाहि—

"अथ शब्दानुशासनं, अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते, शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम्, केषां शब्दानां, लौकिकानां वैदिकानां च, तत्र लौकिकास्तावद् गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति वैदिकाः खल्वपि शन्नोदेवीरभिष्टये" इति ॥

नन्वत्र लौकिकानां वैदिकानामिति भेदनिर्देशः कथम् । तत्राह कय्यटः "अथवा भाषाशब्दानामेव लौकिकत्वमिति भेदेन निर्देशः" इति । अयं भावः । गौरित्यादयः शब्दा यथोपलभ्यन्ते लोके तथा वेदेपि यथा च वेदे तथा लोकेपि पुनर्गौरित्यादीनां लौकिकत्वकथनेन वैदिकत्वं न निषिध्यति निषेधवाचकपदाभावात् । किं तु ये गवादयः शब्दा लोके श्रूयन्ते तेषां लौकिकत्वं । ये च वेदे तेषां वैदिकत्वम् । तदेव स्फुटीकृतं भाषाशब्दानामेव लौकिकत्वमिति वदता कय्यटेन ।

यदि च संस्कृतसंभाषणप्रचारो नासीत्तदा गौरित्यादीनां संस्कृतशब्दानां कथं लौकिकत्वमुक्तं भाष्यकारेण ।

अन्यदप्युक्तं भाष्यकारेण तदप्याकर्ण्यताम् । तथाहि—

"सर्वे खल्वेतेशब्दा देशान्तरेषु प्रयुज्यन्ते, न चोपलभ्यन्ते, उपलब्धौ यत्नः क्रियताम्, महान्शब्दस्य प्रयोगविषयः,

सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदा इत्यादिः। एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रमेव।

एतस्मिँश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते, तद् यथा—

शवति गतिकर्मा कंबोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते शव इति, हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गतिमेव त्वार्याः प्रयुञ्जते, दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु।

ये चाप्येते भवतोऽप्रयुक्ताभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते"। इति।

किं श्रुतं न वा श्रीमता, भाष्यकारेण प्रतिदेशं साधितः संस्कृतप्रचारः।

यदपि विपक्षेण 'दार्गिनायनः' इत्यादि गूढशब्दाभिप्रायेणोक्तं 'न चोपलभ्यन्ते' तदर्थमप्युक्तं भाष्यकृता 'ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते' इति।

इदानीमुच्यतां किं ते संस्कृतमस्ति यस्य प्रचारो नासीत्, कश्च ते भारतो यत्र प्रचारो नासीत्॥

पुनरुच्यते भाष्यकारेण 'लिङ्गमशिष्यं लोकाश्रयत्वात्' इति। यदि संस्कृतसंभाषणप्रचारो नासीत्तदा संस्कृतशब्दानां लोकाद् बोधः कथमुद्दिष्टो भगवता।

यदि भाष्यकारसमयसंवित्तिपृच्छास्ति तदा पूर्वोक्तेन ब्रह्मवैवर्तप्रमाणेन पाणिनेरनन्तरभावितया युधिष्ठिरराज्यात् पाश्चात्यमेवानुमीयते भाष्यकृति।

पूर्वोक्त भाष्यवचनैस्तु स्फुटं प्रतीयत आभाष्यकारं संस्कृतप्रचारता ।

यदि च पुनरपि श्रीमता संस्कृतशिखाग्रहणं क्रियते रामायणप्रमाणेन । यथोक्तं श्रीहनुमता श्रीरामायणसुन्दरकाण्डे ३० सर्गे ।

'अहं ह्यतितनुश्चैव वानरश्च विशेषतः ।
वाचं चोदाहरिष्यामि मानुषीमिव संस्कृताम् ११७।
यदि वाचं प्रवक्ष्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना सा सीता भीता भविष्यति ३१८।
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ।
मया सान्त्वयितुं शक्या नान्यथेयं मनिन्दिता ३१९।

इत्यनेन । तत्रापि ममैतन्निवेदनं नास्ति यत् पशुपक्षिणामपि भारते संस्कृतभाषैवासीत् । किं तु मनुष्याणाम् । हनुमत्प्रभृतयस्तु वानरा न तु नरास्तेषां संस्कृतभाषा नासीदनेन को दोषः । लङ्कानिवासिनामपि भवत्वन्यैव भाषा तथापि नैव दोषो लङ्कायाः भारतवाह्यत्वात् ।

अस्मिन्नपि प्रमाणे 'मानुषीमिवसंस्कृताम्' इत्यनेन स्फुटं प्रतीयते मे समीहितं भो ।
न न्वत्रैव 'मानुषीमिव संस्कृताम्' 'द्विजातिरिव संस्कृताम्' इति पद्यद्वयेन संदिह्यत इति चेन्नास्ति दोषायैतत् ।

यतो द्विजातिशब्दो ब्राह्मणक्षत्रियवैश्यानां त्रयाणामेव वाचक इतिमते भवतु भेदो द्विजातिसंस्कृतस्यान्यसंस्कृतस्य च किं तु संस्कृतं तूभयमेव ।

यदि द्विजातिशब्देन ब्राह्मणजातिरेवोच्यते तथापि

न दोषो यतो ब्राह्मणानां पठनपाठनक्रियाबाहुल्येन तेषां संस्कृतस्याऽन्यजनसंस्कृताद्युक्त एव भेदः । तथाप्यु,अयं संस्कृतमेव ।

किमधुना नागरीभाषायां भेदो नास्ति । संस्कृतेऽपि किं परस्परं काव्यभाषायां भेदो नास्ति । किं मल्लिखितगद्यस्य श्रीवाणभट्टलिखितगद्यस्य परस्परं भेदो नास्ति ।

यदि नास्ति तदा दीयतां मह्यं वाणभट्टसमा पदवी ।

यदि चास्ति भेदः किं तु संस्कृतत्वं तु मल्लेखेप्यस्ति । एवं तदापि भेद आसीदित्यनेन किं कृतम् ।

प्रत्युत सिद्धं साम्राज्यं संस्कृतभाषाया यथा—तदानीं वानरा अपि संस्कृतज्ञा आसन्, तथैव रावणप्रभृतयो राक्षसा अपि ।

द्वारिकायामपि संस्कृतप्रचार एवानुमीयते यतो भारतवासिनैव यादवकुलेन तत्र गत्वा निवासोऽकारि ।

शुक्रनीतावप्युक्तम्—

'सुनीतिकुशला नित्यं प्रभवन्ति च भूमिपाः ।
शब्दार्थानां न किं ज्ञानं विना व्याकरणं भवेत् ॥

टीका यथा 'भूमिपा राजानो नित्यं सुनीतौ कुशलाः प्रभवन्ति, अस्य नीतिशास्त्रस्य ज्ञानादिति भावः । ननु व्याकरणमनधीत्य कथं शब्दज्ञानं तद्दते च कथं नीतिज्ञानसंभव इत्याशङ्क्याह शब्दानामिति । व्याकरणं विना शब्दार्थानां ज्ञानं किं न भवेत् ? अपि तु भवेदेव । व्याकरणस्य शब्दसाधन एव प्रयोजकत्वादिति भावः' ।

इत्यनेन स्पष्टं संस्कृतसंभाषणप्रचार आसीत् पुरेत्युच्यते यदि चेत् संस्कृतभाषा निर्मिता स्यात्तदा विना व्याकरणं कथं संस्कृतशब्दानामर्थबोधः स्यात्। उक्तं चोक्तपद्येऽश्रीशुक्रेण विना व्याकरणं बोधः।

पुनरप्युक्तं तत्रैव—

'स्वस्वाभिमतबोधीनि शास्त्राण्येतानि सन्ति हि'।

अर्थात् यानि यानि शास्त्राणि सन्ति तानि केवलं स्वसिद्धान्तबोधकानि सन्ति। न तु लोकव्यवहारस्यापि। एतेन व्याकरणमपि प्रक्रियामात्रबोधकं नतु शब्दार्थज्ञानबोधकं तस्य लोकत एव सिद्धसत्वात्। अन्यथा सिद्धसाधनं स्यात्।

यथा -भवतीत्यत्र भू धातुरस्ति। तस्मात् 'वर्तमाने लट्' इति लट् प्राप्तः। तिपादेशो जातः। शबागतः। गुणावादेशौकृतौ। ततो भवतीति सिद्धमिति प्रकारेण प्रक्रिया बुध्यते व्याकरणेन। नत्वेकदेवदत्तकर्तृकाभावनानुकूला कृतिः तस्या लोकत एव बोधात्।

सिद्धमनेन संस्कृतस्य मातृभाषात्वं, विना व्याकरणं मातृभाषाया एव बोद्धुं शक्यत्वात्।

दण्डिनाप्युक्तम्—

'इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते १'

इह लोके शिष्टैर्महेश्वरेन्द्रचन्द्रपाणिनिवररुचिप्रभृतिभिरनुशिष्टानां प्रकृतिप्रत्ययविभागादिना व्युत्पादितानां संस्कृतानां प्राकृतानां च शिष्टानां देशीनां च वाचां प्रसादेन

लोकयात्रा प्रवर्तत इत्यर्थः । इत्थञ्च संस्कृतप्रसादेनापि लोकयात्राप्रवृत्तिकीर्तनात् सिद्धं तस्य मातृभाषात्वम् ।

नन्वत्र शिष्टैरनुशिष्टानामित्यनेनानुमीयते पाणिनि-प्रभृतिभिरेव निर्मीयाऽनुशासितानां प्रचारं प्रापितानामिति चेन्न । अनुपश्चात् संभाषणप्रचारस्य पश्चात् शिष्टानां सूत्रादिनिर्माणेन विशेषितानामित्यर्थः, अनुवादितानां वेत्यर्थः । अनुवादश्च सिद्धस्यैव भवति । तेन संभाषणप्रचारात् शास्त्रात्यमनुशासनकर्तृत्वं सिद्धमिति सिद्धं नः समीहितम् ॥

अथ च श्रूयतां सावधानतया यत उक्तं भोजराजेन सरस्वतीकण्ठाभरणे यथा—

'कोऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः ।
काले श्रीसाहसांकस्य के न संस्कृतभाषिणः ' ॥
आढ्यराजः शालिवाहनः । साहसांको विक्रमः ।

इत्यनेन तु विक्रमपर्यन्तं संस्कृतसंभाषणप्रचारः सिध्यति । ननु विक्रमादित्यकाल एव प्रचारः सिध्यति न तु ततोपि पूर्वमनेन तस्मात्तेन चक्रवर्तिना शासनेन प्रचारं प्रापिता स्यात् संस्कृतभाषेति । हन्त भो पूर्वमेवोक्तं मया न शासनेन भाषाप्रचारो भवति ।

ननु तर्हि सिद्धस्यैव प्रचारस्य कथनेन किमायातम् । इदमायातं यथा - विक्रमादित्यात्पूर्वं सामान्यतः प्रचार आसीदेव विक्रमकालेऽलंकारादिविभूषितस्य प्रचारो जातः । उन्नतिश्च जाताऽनेककाव्यरचनादिनेत्युच्यते प्रशस्तिबोधनाय ।

अपिचाकर्ण्यताम्—

प्राकृतमितिपदे 'प्रकृतेरागतं प्राकृतम्, प्रकृतिश्च संस्कृतम्" इति तत्र तत्र यत् प्रेक्षावद्भिर्व्याख्यानं कृतं तत् कथं संगच्छेत यदि भारतस्यादिभाषा संस्कृतं न स्यात्।

अथानुमानं श्रुयतां मे यदस्याग्रहद्दरिद्रम्।

यदिदानीं वेदभाषायाः संस्कृतमस्ति तस्यैवादौ संभाषण प्रचार आसीत्। यदा च कालप्रभावेन जातं भेदेन नृणां वाचि तदा वृद्धधीरैर्यैरालोचितं नास्मैवमेव कियत्कालेन महान् भेदो भविष्यति वेदनृगिरोस्तस्मात् कोप्यत्रोपायः कर्तव्य इति विचार्य । तैर्व्याकरणं निरमायि। तानि च व्याकरणान्येनेकानि श्रूयन्ते महेश्वरव्याकरणं, चन्द्रव्याकरणमित्यादिनि सर्वेभ्यः पाश्चात्यं च पाणिनेरस्ति व्याकरणं यस्याधुना राज्यमस्ति।

व्याकरणस्य द्वौ भागौ। तत्रैको नाम लौकिकोऽपरो वैदिक इति। वेदभागे लोकतो यद् यद् विशेषोस्ति वेदे प्रक्रियायाः स्वराणां वा तत् प्रतिपादितम्।

तस्य संस्कृतस्य संभाषणप्रचारः पाण्डवराज्यपर्यन्तं सम्यगासीत्। ततश्च पुनर्भेदप्राप्त्या प्राकृतस्य जन्माऽभूत्। यथा कथं च विक्रमराज्यपर्यंतमप्यासीत् संस्कृतम्। विक्रमराजेन दृष्ट्वा संस्कृतस्य श्लथादृशा प्रयतितं तत्सौन्दर्याय। लब्धं च समीहितमीहातोप्यधिकम्। यथा तत्समय एव संपादितानि सन्ति महाकाव्यान्यऽनर्घाणि।

यदि विक्रमानन्तरमपि तत्सदृशाः संस्कृतपक्षग्रहिला अचलापालका जायेरंस्तदा संस्कृतमपि वद्धमूलं जायेत। दिष्टवशात् पक्षहीनेन नष्टं संस्कृतेन। वर्धितं च प्राकृतेन।

तच्च प्राकृतं देशभेदेनापि पुनर्भेदं प्राप्तम् । यथा—शूरसेने शौरसेनी, महाराष्ट्रे महाराष्ट्री, मगधे मागधी, पाञ्चाले पाञ्चाली, इत्याद्याः संज्ञाश्च जाताः । तदेव दैवनियोगतः परिणमन् प्राकृतमिदानींतनीं वाग्रूपतां प्राप्तम् । यथा - घटो गृहो मिष्टं पुस्तकमित्यादिः संस्कृते श्रूयते । घड़ा घर मिठाई पोथी इत्यादिश्च भाषायाम् । इदानींतनीभाषाशब्दाश्चतुर्विधास्तथाहि । केपि संस्कृता यथा जलपनदीपादयः । केपि प्राकृता यथा - घर थण इत्यादयः केपि फारसीभाषाया यथा - जहाज आव इत्यादयः । केपि देशीशब्दा यथा - थाल रोटी चावल सड़क पंखा इत्यादयः । यद्यपि टेलीग्राम इत्यादीनां अंगरेजीशब्दानामप्यस्ति संकरस्तथापि सर्वसाधारण्याभावाच्चतुर्विधत्वमुक्तम् । यदि चाग्रहोस्ति अंग्रेजीशब्दसंकरेपि तदा तु पञ्चविधत्वं भवतु ।

आशास्महे संप्रत्यवधारितं भविष्यति श्रीमता मम निवेदनम् । अलमग्रे ।

हं हो संस्कृतवाग्गता क्व विषयं त्यक्त्वाधुना भारतं-
धन्यस्तत्समयो यदा नु रसनाभागेऽस्फुरत् सा नृणाम् ।
आहृता विबुधैःसभासु, नियतेर्दोषोऽथवा मादृशां-
याता विक्रमराजहंससरणीं दृष्ट्वे व शून्यं जगत् १

समर्प्यते ते करपल्लवे मया
गृहाण हे सज्जन लोकरञ्जन ।
विवेचना संस्कृतभाषणस्य ते
कृता मुदेऽतः सदयं विलोकय ॥१॥

समाप्तेयं संस्कृतभाषा

